आत्मस्तवः
शमदमसाधनयुक्तैर्वेत्तुं योग्ये गुरुप्रसादेन ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १॥

अन्नमयादिषु पञ्चसु ममताहीनैः सुखेन संवेद्ये ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ २॥

सकलागमान्तगेये सकलजगद्व्याप्य संस्थितेऽनन्ते ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ३॥

आदौ प्रजाधिनाथेनोक्ते प्रणताय मघवते बहुशः ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ४॥

इनचन्द्रतारकादिमजगतामवभासके स्वतः स्फुरति ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ५॥

नचिकेतसे ऋषीश्वरपुत्रायात्यादरेण मृत्यूक्ते ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ६॥

भ्रूमध्यहृदयशीर्षेष्वाहितचेतोभिराशु संवेद्ये ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ७॥

मायामात्रादादृतनिखिलजगज्जन्ममुख्यकर्तृत्वे ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रुपे ॥ ८॥

मुनिनिकराय पुरा खलु वटमूलगतेन शम्भुनाऽऽदिष्टे ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रपे ॥ ९॥

यतिवरसदाशिवेन्द्रैरार्याभिस्तोषपूर्वसङ्गीते ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १०॥

सुतगेहधनकलत्राद्यासक्तानां सुदूरतरे ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ ११॥

संन्यस्तसर्वकर्मभिरावेद्येऽत्यन्तसूक्ष्मशेमुषिभिः ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १२॥

तृणतोऽप्यतिलघुतरमिदमखिलं विश्वं विलोकयन्योगात् ।

अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १३॥

दृश्यं हि नामरूपं रज्जूरगतुल्यमेव निश्चिन्वन् ।
अयमात्मनि रमतां किं वत्स श्रीकण्ठ सत्यचिद्रूपे ॥ १४॥

इति शृङ्गेरि श्रीजगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंह-
भारतीस्वामिभिः विरचितः आत्मस्तवः सम्पूर्णः ।